# सोमोत्पत्तिः (याजुर्वेदिकी)

## A Mantra for safe Delivery

हरिः ॐ ॥ श्री गुरुभ्यो नमः ॥

ऋषय ऊचुः-

कौतूहलं समुत्पन्नं देवता ऋषिभिः सह ।
संशयं परिपृच्छन्ति व्यासं धर्मार्थ कोविदम् ॥ 1

कथं वा क्षीयते सोमः क्षीणो वा वर्धते कथम् ।
इमं प्रश्नं महाभाग ब्रूहि सर्वं अशेषतः ॥ 2

व्यास उवाच-

शृण्वन्तु देवताः सर्वे यदर्थं इह आगताः ।
तमर्थं संप्रवक्ष्यामि सोमस्य गतिं उत्तमाम् ॥ 3

अग्नौ हुतं च दत्तं च सर्वं सोमगतं भवेत् ।
तत्र सोमः समुत्पन्नः स्मितांशु-र्हिम-वर्षणः ॥ 4

अष्टाशीति सहस्राणि विस्तीर्णो योजनानि तु ।
प्रमाणं तत्र विज्ञेयं कलाः पञ्चदशैव तत् ॥ 5

षोडशी तु कलाप्यत्र इत्येकोऽपि विधिर्भवेत् ।
तं च सोमं पपुर्देवाः पर्यायेण-आनुपूर्वशः ॥ 6

प्रथमां पिबते वह्निः द्वितीयां पिबते रविः ।
विश्वेदेवाः तृतीयां तु चतुर्थी सलिलाधिपः ॥ 7

पञ्चमीं तु वषट् कारः षष्ठीं पिबन्ति वासवः । 16
सप्तमीं ऋषयो दिव्याः अष्टमीं अज एकपात् ॥ 8

नवमीं कृष्णपक्षस्य यमः प्राश्नाति वै कलाम् ।
दशमीं पिबते वायुः पिबत्येकादशीं उमा ॥ 9

द्वादशीं पितरः सर्वे सम्प्राश्नन्ति भागशः ।
त्रयोदशीं धनाध्यक्षः कुबेरः पिबते कलाम् ॥ 10

चतुर्दशीं पशुपतिः पञ्चदशीं प्रजापतिः ।
निष्पीत एक-कलाशेषः चन्द्रमा न प्रकाशते ॥ 11

कला षोडशकायां तु आपः प्रविशते सदा ।
अमायां तु सदा सोमः ओषधिः प्रतिपद्यते ॥ 12

तं ओषधि-गतं गावः पिबन्त्यंबु-गतं च यत् ।
यत्क्षीरं अमृतं भूत्वा मन्त्रपूतं द्विजातिभिः ॥ 13

हुत-मग्निषु यज्ञेषु पुनः-आप्यायते शशी ।
दिने दिने कला वृद्धिः पौर्णिमास्यां तु पूर्णतः ॥ 14

नवों नवो भवति जायं मानोऽह्नां
केतु रुपसां-मेत्यग्रे ।
भागं देवेभ्यो विदंधा-त्यायन्
प्र-चन्द्रमां-स्तरति दीर्घमायुः ॥ 15

त्रिमुहूर्तं वसेत् अर्के त्रिमुहूर्तं जले वसेत् ।
त्रिमुहूर्तं वसेद् गोपु त्रिमुहूर्तं वनस्पतौ ॥ 16

वनस्पति-गते सोमे यस्तु हिंस्याद् वनस्पतिम् ।
घोरायां भ्रूण हत्यायां युज्यते नात्र संशयः ॥ 17

वनस्पति-गते सोमे अनडुहो यस्तु वाहयेत् ।
नाश्नन्ति पितरः तस्य दशवर्षाणि पंच च ॥ 18

वनस्पति-गते सोमे पन्थानं यस्तु कारयेत् ।
गावः तस्य प्रणश्यन्ति चिरकाल-मुप-स्थिताः ॥ 19

वनस्पति-गते सोमे स्त्रियं वा योऽधि-गच्छति ।
स्वर्गस्थाः पितर-स्तस्य च्यवन्ते नात्र संशयः ॥ 20

वनस्पति-गते सोमे परान्नं यस्तु भुञ्जति ।
तस्य मासकृतो होमः दातार-मधि-गच्छति ॥ 21

वनस्पति-गते सोमे यः कुर्यात् दन्त-धावनम् ।
चन्द्रमा भक्षितो येन पितृ-वंशस्य घातकः ॥ 22

सोमोत्पत्ति-मिमां यस्तु श्राद्धकाले सदा पठेत् ।
तदन्नं अमृतं भूत्वा पितॄणां दत्तमक्षयम् । 23

सोमोत्पत्ति-मिमां यस्तु गुर्विणीं श्रावयेत् प्रियाम् । 21
ऋषभं जनयेत्-पुत्रं सर्वज्ञं वेद-पारगम् ॥ 24

सोमोत्पत्ति-मिमां यस्तु पर्वकाले सदा पठेत् ।
सर्वान् कामान् अवाप्नोति सोमलोकं स गच्छति ॥ 25

श्रीसोमलोकं स गच्छत्यों नम इति ।

शुक्ले देवान् पितॄन् कृष्णे, तर्पय्त्यमृतेन च ।
यश्च राजा द्विजातीनां तस्मै सोमात्मने नमः ॥ 26